# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक—पद्मश्री जिनविजय मुनि, पुरातत्त्वाचार्य

[सम्मान्य सञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर]

ग्रन्थाङ्क २

# कर्णामृत-प्रपा






प्र का श क

राजस्थान राज्य संस्थापित

**राजस्थान प्राच्यविद्या प्रतिष्ठान**

जोधपुर (राजस्थान)

RAJASTHAN ORIENTAL RESEARCH INSTITUTE, JODHPUR

# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक – पद्मश्री जिनविजय मुनि, पुरातत्त्वाचार्य

[ सम्मान्य सञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर ]

ग्रन्थाङ्क २


भट्ट सोमेश्वर कृत

# कर्णामृत-प्रपा


प्रकाशक

राजस्थान राज्य संस्थापित

**राजस्थान प्राच्यविद्या प्रतिष्ठान**

जोधपुर ( राजस्थान )

RAJASTHAN ORIENTAL RESEARCH INSTITUTE, JODHPUR

# राजस्थान पुरातन ग्रन्थमाला

राजस्थान राज्य द्वारा प्रकाशित

सामान्यतः अखिल भारतीय तथा विशेषतः राजस्थानदेशीय पुरातनकालीन
संस्कृत, प्राकृत, अपभ्रंश, राजस्थानी, हिन्दी आदि भाषानिबद्ध
विविध वाङ्मयप्रकाशिनी विशिष्ट ग्रन्थावलि



*प्रधान सम्पादक*

पद्मश्री जिनविजय मुनि, पुरातत्त्वाचार्य

सम्मान्य संचालक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर;
ऑनरेरि मेम्बर ऑफ जर्मन ओरिएन्टल सोसाइटी, जर्मनी;
निवृत्त सम्मान्य नियामक ( ऑनरेरि डायरेक्टर ),
भारतीय विद्याभवन, बम्बई; प्रधान सम्पादक,
सिंघी जैन ग्रन्थमाला, इत्यादि


ग्रन्थाङ्क २

भट्ट सोमेश्वर कृत

# कर्णामृत-प्रपा


प्रकाशक

राजस्थान राज्याज्ञानुसार

सञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर ( राजस्थान )

भट्ट सोमेश्वर कृत

# कर्णामृत-प्रपा

सम्पादक

पद्मश्री मुनि जिनविजय, पुरातत्त्वाचार्य

सम्मान्य सञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान,

जोधपुर

प्रकाशनकर्त्ता

राजस्थान राज्याज्ञानुसार

सञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर ( राजस्थान )

| विक्रमाब्द २०२० | भारतराष्ट्रीय शकाब्द १८८५ | खिस्ताब्द १९६३ |
| --- | --- | --- |
| प्रथमावृत्ति १००० | | मूल्य २.२५ |

प्रधान सम्पादकीय वक्तव्य एवं टाइटल पृष्ठ के मुद्रक– साधना प्रेस, जोधपुर

शेष भाग के मुद्रक– निर्णय सागर प्रेस, बम्बई।

# विषय-तालिका

## FOREWORD

With the publication of *Karṇāmṛtaprapā* an interesting anthology from the pen of a remarkable poet of medieval Sanskrit literature is presented to the world of Sanskrit learning. Someśvara or Someśvaradeva, as he prefers to call himself, was born in the family of the hereditary priests of the Calukya Kings of Gujarāt ruling at Aṇahilvāḍ Pāṭaṇ. He was the royal priest of King Bhīmadeva II and a close friend of Mahāmātya Vastupāla who was a great patron of literature and art and will b. ever remembered along with his younger brother Tejapāla as a builder of the famous Jaina temples on Mt. Ābu. First half of the 13th century A.D. was the period of Someśvara's active life.

Someśvara attempted diverse forms of Sanskrit literature like Mahākāvya, Nāṭaka, Stotra, Anthology, and Praśastis of various temples built by Vastupāla and also by King Vīradhavala and his son Vīsaladeva. For an exhaustive account of the life and works of Someśvara the curious reader is referred to *Literary Circle of Mahāmātya Vastupāla and its Contribution to Sanskrit Literature* (pp. 44-56, 88-94, 103-107, 112-118, 128-130, 136-138, 140-142) by Professor Bhogilal J. Sandesara, published in the Singhi Jaina Series as no. 33.

Out of the various works by Someśvara, his two *Mahākāvyas-Kīrtikaumudī* describing the good deeds of Vastupāla and *Surathotsava*, a mythological poem—were published in the Bombay Sanskrit Series and Kāvyamālā Series respectively. His *Ullāgharāghava Nāṭaka*, dramatizing the story of the *Rāmāyaṇa*, has been recently published in the Gaekwad Oriental Series and *Rāmaśataka*, a hymn to Rāma with two commentaries, is under print in the same series. Praśastis composed by Someśvara are already published in various journals and then in collections of inscriptions like the *Prācīna Jaina Lekha Saṅgraha*. The *Karṇāmṛtaprapā*, an anthology of verses, was the only work of Someśvara which remained to be brought to light.

Anthologies may be the composition of one author on various topics or selection from earlier authors. The *Karṇāmṛtaprapā* belongs to the former class, as all the 217 verses in it are Someśvara's own

compositions. This shows that Someśvara was a versatile literary figure who composed stray Subhāṣitas as well as big works like Nāṭaka and Mahākāvya.

This edition of the *Karṇāmṛtaprapā* has been prepared from its only available manuscript preserved in the Government Collection of MSS. (no. 39 of 1871-72) deposited at the Bhandarkar Oriental Research Institute, Poona. The text was printed some years back, but the publication was delayed on account of several reasons. It is a matter of great satisfaction to me that the book is out now. I have no doubt that it will be useful in the study of medieval Sanskrit poetry in general and in a detailed study of Someśvara's literary works in particular.

MUNI JINA VIJAYA

Rajasthan Oriental Research Institute,
Branch : Chittodgaḍha (Rajasthan)
28-2-63

ठक्कुर-सोमेश्वरदेव-विरचिता

# कर्णामृतप्रपा

## सुभाषितावली



यं पद्मा सेवते पद्माशयेव जलशायिनम् ।
स वः करोतु कंसारिः संसारव्ययमव्ययम् ॥ १ ॥

तं स्मरामि स्मरामित्रं येनास्मि स्मरणादपि ।
शुभानामशुभानां च कर्म्मणामव्रणीकृतः ॥ २ ॥

अन्तर्झम्पापातनिर्म्मुक्तदेहान्
मर्त्त्यानूर्द्ध्वं गच्छतोऽनुच्छलन्ती ।
अन्वेतीव स्नेहतः सीकराणां
श्रेणिर्यस्यास्तामहं नौमि गङ्गाम् ॥ ३ ॥

कष्टानष्टापि निर्विश्य रसांस्तेष्वद्य नीरसः ।
श्रीकुमारसुतो ब्रूते पिपासुर्न्नवमं रसम् ॥ ४ ॥

विषयरसनिरन्तरानुपान-
प्रकुपितमोहकफोपगुम्फितात्मा ।
त्रिकटुकगुटिकामिव त्रिवेदीं
वदनगतामहमन्वहं वहामि ॥ ५ ॥

यो यः प्रादुरभूद् भावो भवं भावयतो मम ।
स स बद्धो मृषा-मायाबद्धं बोधयितुं जगत् ॥ ६ ॥

*

संसारोऽयमसारः प्रसिद्धमेतत् तथाऽपि कथयामि ।
जागर्यते हि सुप्तः पुनः पुनः साधु बोधाय ॥ ७ ॥

अहो ! संसारकारान्तर्मायानिगडितात्मनाम् ।
दृश्यते जातु जन्तूनां निर्वृतिर्न कथञ्चन ॥ ८ ॥

केचिद् द्युम्नाय धावन्ति प्रद्युम्नाय च केचन ।
नोद्युङ्क्ते कोऽपि धर्माय सर्वाभिप्रेतहेतवे ॥ ९ ॥

# १. अथ लक्ष्मीः ।

उच्चैर्गर्वे समारोप्य नरं श्रीराशु गच्छति ।
दौस्थ्यदत्तावलम्बोऽथ स तस्मादवरोहति ॥ १० ॥

जितं लक्ष्मि ! त्वया यस्मै जनस्तमपि सेवते ।
धनं निकारपूर्वं यः प्रदत्ते प्रेतनाथवत् ॥ ११ ॥

महान्ववायान् शुभशुद्धबुद्धीन्
सेवाऽऽगतानाढ्यचरानवेक्ष्य ।
जातः श्रिया मूढ ! किमूढगर्वः
स्थिरश्चलं चिन्तय शीलमस्याः ॥ १२ ॥

यल्लाभाय महीभुजः कुमतयो दूरादुपश्लोकिता
नैराश्यं गमिताः श्रुतिस्मृतिविदो यत्तृष्णया तेऽर्थिनः ।
यद्रक्षार्थमशायि रात्रिषु सुखं न स्तेयभीत्या मया
नापृष्टोऽसि तया रयात् कमलया यान्त्याऽतिनिःस्नेहया १३

नमस्तुभ्यं तस्यै प्रकृतिचपले ! देवि ! कमले !
पतिः पत्तिः पत्तिः पतिरिति यया दर्शितमिह ।
तथाऽप्येतच्चेतस्त्वयि किमपि जातस्पृहमहो !
न ताम्यद् विश्राम्यत्यकृपनृपसेवाऽध्यवसितात् ॥ १४ ॥

उषित्वा कंसारेश्चिरमुरसि वैदग्ध्यमधुरे
भवत्या मातः ! श्रीरिदमपि न किं शिक्षितमतः ।
यदेतेषु द्वेषं गुणिषु दधती वेश्मनि धन-
क्षयावेशान्धानामहमहमहतामागतमिति ॥ १५ ॥

कुर्वन्त्येवं सर्वलोकोपहास्यं
देवि ! श्रीः किं न स्वयं लज्जिताऽसि ।
युक्तं येषां रे ! पदेनाभिधानं
संबोध्यन्ते देवशब्देन तेऽपि ॥ १६ ॥

अन्यायसंभवा श्रीरन्यायेनैव याति सा नियतम् ।
अर्जनहानिक्लेशः केवलमवशिष्यते कुधियाम् ॥ १७ ॥

सन्तः कथं नाम न ते नमस्या
वृता वृषस्यन्त्यपि यैर्न लक्ष्मीः।
वयं विरक्तामपि तां तु भोक्तु-
मसक्तमासक्तिपराश्चरामः॥ १८॥

मनोऽस्ति मुक्तावनुरक्तमेत-
न्न सोमपानेन विना पुनः सा।
तत् तु श्रिया सिद्ध्यति तेन तस्यै
गतस्पृहोऽपि स्पृहयालुरस्मि॥ १९॥

## २. अथ कामः।

येषां न चाटुरचना न च हग्विलासो
वासोविभूषणगणप्रणयश्च नाङ्गे।
पुष्पायुधः पशुषु तेष्वपि दुर्निवारः
स्फारः कथं न स भविष्यति मानवेषु॥ २०॥

सृष्टाः कस्मात् कुवलयहशश्चेत् तदर्थं प्रकामः
कामः पुंसां किमिह विहितः सोऽपि कामः कृतो वा।
सत्संभोगात् किमथ मलथूद्भावितं तद् विधातः!
सोऽयं जातस्त्वदुपजनितो मानवानामनर्थः॥ २१॥

हिनस्ति हा मां कुसुमायुधोऽय-
मेह्येहि चक्रायुध! रक्ष रक्ष।
त्वदाश्रिते ताम्यति मय्युपेक्षा
रक्षासमर्थस्य न युज्यते ते॥ २२॥

यावद् यावदुपास्महे स्मरपरीतोषाय तास्ताः स्त्रियस्-
तावत् तावदसावसाधुरधिकं दन्दह्यते मानसम्।
तस्मिंश्चुन्द्रटभालचक्षुषि विभौ ध्यातेऽतिमर्म्मस्पृशाम्
अस्माकं हृदयादयं कथमपि त्यक्त्वा स्वयं प्रस्थितः॥ २३॥

करे यष्टिर्दृष्टं किमपि नयने न प्रभवते
नतो गल्लाभोगः पतितदशनत्वादयमपि।
तदस्मादव्रीडस्थविर! विरम त्वं स्मरसुखात्
स्मर श्रीवत्साङ्कं जगति गतिरेषा हि रुचिरा॥ २४॥

वरं सा संसारप्रणयभयभीता हुतवहं
सह प्राणेशेन प्रविशति परं भीरुरपि या।
अमी धीरंमन्याः क्षणिकसुखसंतुष्टमनसः
सहन्ते हन्तेमानपि निपततो न स्मरशरान् ॥ २५ ॥

मनस्तापं तन्वन्नवय[ व ]विकारान् विरचयन्
स्वमेवादौ क्रोधः कवलयति पश्चादरिजनम्।
ततश्चेतस्त्यक्त्वा सपदि विपदामास्पदमिमां
क्षमां क्षेमागारं भज विजयसे विश्वमनया ॥ २६ ॥

## ३. अथ लोभः।

शूद्राणां पुरु(र)तः कृताञ्जलिपुटाः कुर्वन्ति सेवाममी
भूदेवाः क्षितिपाः प्रजासु च कृपामुज्झन्ति दृष्ट्वा श्रियम्।
पुत्रे मित्रजनाय चाश्रयवते द्रुह्यन्ति यन्मानवाः
सर्वोऽप्येष गुणापकर्षणरुचे लोभ! प्रभावस्तव ॥ २७ ॥

## ४. अथ कलिस्वरूपम्।

सुकृतकृतमतः परं प्रवृत्त्या
प्रसर कले! सकलेऽपि निर्भयस्त्वम्।
विपणिषु वणिजां पुरोऽपि विप्रा
विदधति वेदविचारविप्लवांस्ते ॥ २८ ॥

तातः परस्व-परदार-परक्षतार्थी
माताऽपनीतपरिणीतपतिश्च येषाम्।
यत् तेऽपि वर्ष्मणि वहन्ति निवेशितं त्वां
हा! ब्रह्मसूत्र! विधिनाऽसि विडम्बितं तत् ॥ २९ ॥

लब्धे यत्र वसुन्धरामरतया मर्त्येऽपि संकीर्त्यते
गाधेयः किल सोऽप्यगाधमहिमा चक्रे न किं यत्कृते।
निःसन्ध्याविधयो निरक्षरमुखा निर्ब्रह्मसूत्राः कलौ
ब्राह्मण्येन वहन्ति हत! कतिचित् तेनापि लज्जां द्विजाः ॥३०

गोपीचन्दनतिलकैर्नवोपवीतैः सितांशुकैर्विमलैः।
धूर्ताश्चरन्ति केचन जन्मभिरिह केवलं मलिनैः ॥ ३१ ॥

गेहं गोमयलिप्तमुप्ततुलसीदूर्वावणं प्राङ्गणं
वंशालम्बितशुक्लधौतवसनं मुक्तोदपात्रं पुरः।
साक्षाद् दर्भतिलाक्षतस्थितियुतं व्यक्तीकृतं.........
विप्राणां गृहिणीपदे कुलवधूमन्या पणस्त्री पुनः॥ ३२॥

कलिद्विजेभ्यः प्रणतोऽस्मि तेभ्यः
पुष्णन्ति यत्नेन निरन्तरं ये।
कायव्रतार्थं जरतीं सवित्रीं
पुत्रीं च कन्यामिह विक्रयार्थम्॥ ३३॥

ऐदंयुगीनस्य जनस्य वृत्तै-
रुक्तै[ः] श्रुतैर्वा किमिहास्ति कार्यम्।
उपाधिसिद्धा बहिरस्य मैत्री
स्वभावसिद्धस्तु विरोधभावः॥ ३४॥

वदसि मधुरां वाणीं पाणिद्वयं मुहुरानते
शिरसि रचयस्युर्वीं सर्वां धिनोषि धनैर्यदि।
सरलविरलः कोऽपि श्लाघां करोति तथाऽपि ते
न हि परगुणानेष स्तौति स्वभावखलो जनः॥ ३५॥

अथवा शान्तं पापं स्वात्मन एव प्रवर्त्त्यतां चिन्ता।
अविचारितरमणीयैः कृतमेतैर्लोकवृत्तान्तैः॥ ३६॥

वीतास्ते दिवसाः प्रसाद्य सुचिरं यत्रानमन्मौलिभिर्-
भूपालैर्गलितस्पृहा अपि धनं विप्राः प्रतिग्राहिताः।
तान्येतानि दिनानि संप्रति पुनर्येष्वर्थयन्तोऽपि ते
वित्तं प्रत्युत नाप्नुवन्ति न बहिस्तिष्ठन्त्यपास्ता अपि॥ ३७॥

आशाः पश्यसि किं भृशं भ्रमसि किं कण्ठेन संशु[ष्य]ता
स्वामस्वास्थ्यकथामिति प्रतिजनं जल्पन्न विश्राम्यसि।
मौनी भुङ्क्ष्व फलं हि कर्मजमृजो! वाङ्मात्रमैत्रीपरे
लोके काञ्चनलिप्तताम्रसदृशे सारत्वमन्तः कुतः॥ ३८॥

मज्जन् जले सरल! किं मुहुराकुलस्त्व-
मालोकसे मुखममुष्य तटस्थितस्य।
दाहक्रियोपकरणेन्धनविक्रियैक-
वृत्तेरितस्तव कुतोऽस्तु करावलम्बः॥ ३९॥

## ५. अथ कुनरेन्द्रनिन्दा ।

यातास्ते जगतीतलैकतिलकाः पौरन्दरं मन्दिरं
पन्थाः प्रार्थयितुः प्रदातुरिव यैरुत्कण्ठितैरीक्षितः ।
भूपाः संप्रति ते प्रशासति महीमात्तैरतृप्ताः सतां
वित्तोच्चैर्बत जीवित......त्तुमिच्छन्ति ये ॥ ४० ॥

नीताः क्रतौ ये पशवः शवत्वं
विप्रैस्त एते नृपतामुपेताः ।
तदग्रिमं वैरमनुस्मरन्तः
कुर्वन्ति तेषामपकारमेव ॥ ४१ ॥

धातर् ! विज्ञपयामि किञ्चन मनःखेदाय यन्मे स्थितं
सृष्टाः स्मः किमिहोत्तमे द्विजकुले कस्माच्च सन्तः कृताः ।
यस्मादत्र दुरीशदर्शितमहापापप्रयोगे युगे
सत् कर्म्मार्हति न क्वचिन्न च वयं दुःकर्म जानीमहे ॥ ४२ ॥

दुर्वर्णस्वरमन्त्रमात्रपठनाध्मातैर्द्विजैः शान्तिकं
दैवज्ञैर्दिनशुद्धिरर्क-शशिनौ जानन्ति ये द्वौ ग्रहौ ।
दानं पर्वणि चारणेषु कविभिस्तैरेव कीर्त्तिः स्थिरा
येषां भूमिभुजामलं निजगुणोद्गारेण तेषां पुरः ॥ ४३ ॥

पुण्यमहो महदेषां नृपतीनां ब्रह्मबन्धुमुखपतितैः ।
विस्वरमन्त्रत्सरुभिर्विभिद्यते नोत्तमाङ्गं यत् ॥ ४४ ॥

मुक्ते सौधसुखे परिग्रहपरिस्पन्दे च मन्दीकृते
चित्ते वित्तदुराग्रहान्निगमिते निर्वासिते च स्मरे ।
क्षुद्बाधाविधुरास्तथाऽपि शिशवः संतुष्यतोऽस्मानिमा-
नेते पातयितुं बत व्यवसिताः कुस्वामिसेवांहसि ॥ ४५ ॥

तावदमी दातारस्तावन्मित्राणि तावदतिसरलाः ।
कलिकालभूमिपाला यावन्नैति क्रियाकालः ॥ ४६ ॥

भूमौ दासवदासितं प्रकटिताश्चाटूक्तयः कोटिशः
स्पृष्टा भूः शिरसा पुरश्चरणयोर्बद्धश्च सेवाञ्जलिः ।
न स्निह्यन्ति तथाऽपि कर्कशतरास्तेऽमी नृपप्रस्तरा-
स्तच्चेतश्चिरमच्युतं परिचर श्रद्धासमृद्धिर्यदि ॥ ४७ ॥

गुणी क्षोणीशोऽयं सह सदृशवृत्तैर्विहरता-
मसभ्याः संवृत्ता वयमिह निजैरेव चरितैः ।
तथाऽपि ग्राहिल्यं न हि सदुपहासेन च परि-
श्रमो निस्त्रिंशत्वे न परपरिवादे परिचयः ॥ ४८ ॥

यदभ्यर्णे कर्णे जपलपनवल्मीकविवर-
स्फुरज्जिह्वाव्यालोकवलनभयान्नैति सुजनः ।
फलैर्वा मूलैर्वा सलिलचुलुकैर्वाऽपि सुहिताः
करिष्यामः किं तैः क्षितिपतिपिशाचैरशुचिभिः ॥ ४९ ॥

सत्त्वनिविष्टः शिष्टः पिशुनः पुनराश्रितो रजस्तमसी ।
तत्सुजनादप्यधिके भवति खले भूपबहुमानम् ॥ ५० ॥

शङ्काऽत्र का तव नृपोऽसि यदृच्छयैव
नीचं समानय जनं महता जनेन ।
तिग्मद्युतिप्रतिभटं सरटं विहाय
व्यक्तीकृता हि विधिनाऽप्युचितज्ञतेयम् ॥ ५१ ॥

द्वारि द्वास्थजनो न मुञ्चति चिरान्मुक्तस्य नैवासनं
ताम्बूलस्य कथैव का रुचिरया वाचाऽपि नाभ्यर्थनम् ।
येषां सद्मनि सत् क्रियेति कृतिनः प्राप्तस्य वित्ताशया
चेतस्तानपि वीक्षितुं व्रजसि चेदव्रीड ! तुभ्यं नमः ॥ ५२ ॥

द्वारि मोक्षः कदर्याणामार्याणां यावता भवेत् ।
क्लेशेन तावता मोक्ष[ः] संसारादपि जायते ॥ ५३ ॥

एतैः पातकवृत्तिभिर्नृपतिभिः किं सेवितैर्यन्मुखा-
लोकेनापरजन्मसंचितमपि श्रेयः परिक्षीयते ।
श्रीसोमेश्वरमेकमर्चय चिरं यस्यैष कोशो महा-
नुन्मुद्रोऽस्ति समुद्र एव भुवनाभीष्टप्रदस्यान्तिके ॥ ५४ ॥

किं निन्दसि नृपानेतान् व्यर्थीकृतमनोरथः ।
स्वं निन्द ननु वित्ताशा बद्धा येनेदृशेष्वपि ॥ ५५ ॥

हतमतिषु नृपेषु येन चक्रे
द्रविणकणार्थिधियाऽर्थवादपापम् ।
अमरसरिदसौ तदूर्मिपातै-
र्वपुरपुनाद् यमुनाजलानुलिप्तैः ॥ ५६ ॥

## ६. अथ दुर्जनः ।

स्वयं करोति शक्तश्चेदशक्तश्चिन्तयत्यपि ।
सर्वस्यापि हितं साधुरसाधुरहितं पुनः ॥ ५७ ॥

शिवा खादति मांसानि मृतानामेव केवलम् ।
अशिवा खलजिह्वा तु पृष्ठमांसानि जीवताम् ॥ ५८ ॥

पी(पे?)षणीप्रमुखाः पञ्च सूनाः स्युर्गृहमेधिनाम् ।
दुर्ज्जनानां पुनः षष्ठी हृद्वृत्तिर्नाम तिष्ठति ॥ ५९ ॥

परिहृतिमर्हति दूरादजारजो जारजोऽपि शुद्धिमताम् ।
कुप्रकृतिना समग्रः क्रियते मलिनो जनो येन ॥ ६० ॥

एकदृशं लोलतया द्विजिह्वमसदन्यदोषकथनेन ।
दुश्चेष्टया त्रिजातं व्याचष्टे दुर्जनं लोकः ॥ ६१ ॥

संभाषणीयः स मनीषिणां किमहर्मुखे दृश्यमुखः कथं वा ।
हत्वा न शौचं कुरुते न चापि हत्वा द्विजेन्द्राननुतप्यते यः ॥ ६२ ॥

दुःकालभूपालहतावशिष्टं शिष्टं जनं संप्रति केऽपि दुष्टाः ।
स्वयं परैर्वा परिवादशस्त्रव्रातेन निःशेषयितुं यतन्ते ॥ ६३ ॥

गोमांसमश्नामि सुरां किरामि पिण्डे पितुर्मातरमभ्युपैमि ।
कृतप्रतीतिः शपथैरपीत्थं काले करोत्येव खलः खलत्वम् ॥ ६४ ॥

दुर्जनानां गुणश्रेणिः शरद्गङ्गागुणोज्ज्वला ।
घोरे दुरात्मनां वाग्जनरके निवसेत् कथम् ? ॥ ६५ ॥

## ७. अथ मनस्वी ।

याताऽन्यतः प्रिया श्रीरिति दुर्भगतामुपागता लोके ।
शान्त्याऽऽश्रितोऽभिमानी भूयः सौभाग्यमभ्येति ॥ ६६ ॥

कः खलु सुभगो भुवि यो नादत्ते दीयमानमपि वित्तम् ।
को दुर्भगश्च यस्तल्लभते न हि याचमानोऽपि ॥ ६७ ॥

कालविशेषवशेन प्रसूनमितरेषु तरुषु फलविकलम् ।
सुजनतरुवचनकुसुमं न कदाचिन्निःफलं भवति ॥ ६८ ॥

भाग्यानि तानि भुवनस्य धनी यदि स्या-
दापद्गतोऽप्युपकरोति सतां महात्मा ।
सीतापतिर्वनगतिर्व्यसनस्थितोऽपि
राज्ये चकार कपिराज-पलादराजौ ॥ ६९ ॥

न महे निजेऽपि महतामन्तःकरणं विकारमभ्येति ।
नृत्यति पुनरितरेषामपरोत्सवसीधुना मत्तम् ॥ ७० ॥

## ८. अथ विधिः ।

वैदेहीदयितेऽपि दुष्टहृदयः पार्थेऽप्यनर्थप्रदो
जीमूतेऽपि यमोचितव्यवहृतिः कर्णेऽपि कर्णेजपः ।
भीमो भीमसुतापतावपि हरिश्चन्द्रेऽपि रौद्राशयः
शक्रेऽपि श्रितवक्रिमा हतविधिर्यस्तस्य केऽमी वयम् ॥ ७१ ॥

यद्यपि परःसहस्राः कर्त्तव्यपथास्तथाऽपि विधिरेषः ।
गमयति नस्तेन पथा येनानर्थः पराभूतिः ॥ ७२ ॥

तापयत्यसुखवह्निना मुहुर्लोहटङ्कमिव मानवं विधिः ।
लोहकार इव मोहमुद्गरैर्घातयत्यपि ततः समन्ततः ॥ ७३ ॥

मम दुःखाग्निना नूनमाहिताग्निरयं विधिः ।
तदेनमुपशाम्यन्तमतियत्नेन रक्षति ॥ ७४ ॥

अवदतामपि दुर्वचनं मुहुर्निदधतामपि साधुपथे पदम् ।
जनयति व्यसनं तदहो विधिर्भवति यन्महतामपि दुस्तरम् ॥७५॥

सुरजनमसुरजनं वा गच्छत शरणं नरा वराकाः ।
कः कर्म्मावर्त्ते पतितः क्वचन पुमान् निर्वृतिं नैति ॥ ७६ ॥

तुल्ये पितर्यपि च जन्मनि हन्त ! तुल्ये
कल्याणता भवति दैवकृतैव लोके ।
यद्दक्षिणः पथिषु पुण्यपरेषु पाणि-
र्वामः पुनर्मलिनमार्गमभिप्रवृत्तः ॥ ७७ ॥

कुरुतां विधिर्विरुद्धं तत्कृतमनुमोदतां च पिशुनजनः ।
न मनागपि धीरमनाः कुप्यति तस्मै च तस्मै च ॥ ७८ ॥

ऐश्वर्येण न दुर्दशा भवति चेज्जम्भारिरम्भोरुहे
　लीनः किं न पराक्रमेण यदि तद् रामः किमेवंविधः ।
न त्यागादथवा विलोकय बलिं धर्मान्न चेत् तद्वधूः
　किं दुःखं तदलं खिदा विधिवशादायाति सा याति च ॥ ७९ ॥

## ९. अथ निर्वेदः ।

भ्रातश्चित्त ! विवक्षुरसि किमपि क्रोधं विधत्से न चेत्
　पण्यस्त्रीबहुवञ्चितेन भवता यद् यत् कृतं तच्छृणु ।
पूर्वोपात्तवसुव्ययो न गणितः साध्वी वधूः स्वं मुहु-
　र्निन्दन्ती निहिताऽतिदुःखदहने दूनं च पित्रोर्मनः ॥ ८० ॥

पृथिव्यां द्रव्यान्धाः कति न परिरब्धाः परिभवै-
　र्न वैश्वर्याध्मातक्षितिपकृपणद्वारि पतिताः ।
स कोऽप्येषः स्वामी न च परिचितो यः परपद-
　प्रतिष्ठामानन्दव्यतिकरवरिष्ठां वितरति ॥ ८१ ॥

न गङ्गेऽहं त्वयि स्नातो नग्नं गेहं न च व्यधाम् ।
सहे मानक्षितिं लुब्धः सहेमानं जनं नमन् ॥ ८२ ॥

　न ध्यातः क्वचिदपि पापिना पिनाकी
　　नाऽऽकीर्णं जलमरजः सरिद्वरायाः ।
　न भ्रातः ! सकृदपि रामनाम गीतं
　　हा ! नीतं निजमिदमेवमेव जन्म ॥ ८३ ॥

　मातः ! सरस्वति ! सहस्व बहुक्षमात्व-
　　मेकं विवेकविकलस्य ममापराधम् ।
　यद्दर्शिताऽसि कविधर्म्मबहिर्मुखानां
　　मिथ्यावलिप्तमनसामिह पुंस्पशूनाम् ॥ ८४ ॥

युगमिदं सुकृतैकखलः कलिर्नृपतयस्त इमे गुणविद्विषः ।
उपरता च कथाऽपि महात्मनामहह ! निर्वृतिमेतु कथं मनः ॥८५॥

न तद्दिनं यत्र नवं न दुःखं स्थानं न तद् यत्र गतस्य तुष्टिः ।
न स प्रभुर्यत्र च लब्धुमाशा मित्रं न तद् यत्र निवेदयामि ॥८६॥

यः पत्तिः स सखेव संप्रति समं संभाषते यः सखा
स स्वामीव समीहतेऽधिकतमां पूजां समाजस्थितः ।
यः स्वामी स रिपूयते किमपरं पुत्रोऽप्युदास्ते हहा !
जन्मेवान्यदिहैव जन्मनि धनाभावेन नीता वयम् ॥ ८७ ॥

काकुत्स्थेन वनं प्रविश्य विजनं तीर्णः स दुःखार्णवः
स्वं निह्नुत्य विराटवेश्मनि विपत् सोढाऽजमीढेन सा ।
एते हन्त ! वयं तु दैवतवशादेतां गता दुर्दशा-
मस्मिन्नेव पुरे नरैः परिचितैः पूर्णे चरामः कथम् ॥ ८८ ॥

अर्थार्थं मुक्तमानैः श्वभिरिव भवनद्वारि तस्थे नृपाणां
कामार्थं किं न सोढं परयुवतिरतैस्ताडितं तत्पतीनाम् ।
धर्मार्थं नैकभक्तव्रतमपि चरितं हा ! महामोहमग्नैर्-
यैरेते तेऽद्य कृच्छ्राण्यपि वयमधुना निर्धनाः साधयामः ॥ ८९ ॥

जोवारीचूर्णमन्नं तदपि सकृदसंपन्नभक्ताज्यशाकं
शीर्णं जीर्णं च वासः क्वचिदपरजनावासकोणे निवासः ।
एवं दौर्गत्यदावज्वलनकवलितस्यापि यस्यान्तरात्मा
न स्याद् वैराग्यवाही स खलु शिशु-पशु-प्रस्तरेभ्योऽप्यचेताः ॥९०॥

शयनस्थानं मशकैः शयनीयं मत्कुणैश्च संकीर्णम् ।
गृहचिन्तया च हृदयं तथाऽपि निद्राऽर्थिनी नयने ॥ ९१ ॥

आनन्दामृतशीते कुरु केलिं सरसुखेन हृदि सुखिनाम् ।
स्थित्वा किमिह करिष्यसि दुःखानलसंकुले मनसि ॥ ९२ ॥

किं वाचाल ! करोषि रे ! कलकलं पुंस्कोकिल ! त्वं वृथा
कस्मान्मारुत ! वासि वासितवपुस्त्वं मल्लिका-चम्पकैः ।
चन्द्र ! त्वं च कुतः स्थितोऽसि पुरतः प्रोद्दामदेहद्युते !
नोन्मादं भजते विपत्सु यदिदं दुर्दैवदूनं मनः ॥ ९३ ॥

अकालक्षेपाणि प्रचुरधनसाध्यानि शतशो
विधेयान्यायान्ति द्रविणकणिकाऽप्यस्ति न गृहे ।
न लेशोऽप्याशायाः क्वचिदपि च लाभस्य तदहो !
दरिद्राणामिन्द्रे मयि सति किमन्योऽप्यधृतिमान् ? ॥ ९४ ॥

सपदि विधिर्यः कुरुते तद्वा हृदयं यदनुभवत्यनिशम् ।
जानाति दुःखसंख्यां कथयितुमज्ञा रसज्ञा मे ॥ ९५ ॥

भीति [:] मृत्योः कस्य न स्यादसाव-
प्याशास्योऽभूद् दुःखिनामीदृशां नः ।
सोऽपीदानीं प्राप्यते प्रार्थ्यमानो
धिक् संसारं धिक् तथैवार्थिनोऽस्मान् ॥ ९६ ॥

दुःखातुरे पितरि मातरि साश्रुमुख्यां
क्रोधादिना विधुरिते सुतबन्धुवर्गे ।
आपत्पयोधिपतितानतिताम्यतोऽस्मान्
यद् दैव ! जीवयसि मारयसि ध्रुवं तत् ॥ ९७ ॥

धत्ते व्याकरणं न कोऽपि कवितां कुत्रापि नार्थत्यसौ
तर्कं मर्कटवन्न कोऽपि निकटीकर्तुं कदाऽपीच्छति ।
वेदादुद्विजते जनस्तदपरं नैवाल्पमप्यस्ति मे
भ्रातर् ! जल्प पणेन केन तदहं वित्तं धनिभ्यो लभे ॥ ९८ ॥

अवधिदिवसः प्राप्तः सोऽयं प्रयच्छसि किं न मे
धनमिति धनिन् ! मा स्म क्रोधं विधेहि शृणु क्षणम् ।
यदिह दधतो वित्ताभावादवस्तुषु मुख्यतां
मम न वचनैरायाति श्रीर्न याति च जीवितम् ॥ ९९ ॥

सत्सु प्राणेषु दत्तेषु कृतान्तो विनिवर्त्तते ।
याचमानस्त्वसद् द्रव्यं धनिकः केन तोष्यताम् ॥ १०० ॥

यद्यन्नं न घृतं कदापि तदपि स्यात् तन्न तक्रं तदा
दैवात् तत् त्रितयं भवत्यथ भवेन्नो भोजनं भुक्तये ।
दिष्ट्या संघटितं समग्रमपि तत् तावत् कुतोऽप्युत्कटो
भट्टोऽभ्येति कृपाणिकाङ्कितकरः प्रत्यूहकारी हहा ॥ १०१ ॥

आतङ्काय विलोकितः कृतफणाफूत्कारभारः फणी
कान्तारे तरसा प्रसारितमुखस्तस्माच्च पञ्चाननः ।
उद्घूर्णाङ्कुतलोहमुद्गरकराकारस्ततोऽप्यन्तकः
सर्वेभ्योऽप्यधमर्णतर्णकवृको भट्टः कृपाणीकरः ॥ १०२ ॥

प्रासादे शयनं विकालमशनं मिथ्यार्थसंदर्शनं
स्वस्यापह्नवनं निशासु गमनं भट्टैश्च संतापनम् ।
संबन्धानयनं सचाटुवचनं माहात्म्यनिर्वासनं
यद्याकर्षसि दुःखकारणमृणं तत्पूर्वमेतत् पठ ॥ १०३ ॥

वृक्षश्छायविभागमर्पयति यो वेश्मैव तेनार्पितं
दत्ता भूरिह तेन यो रथपथं दत्ते रथस्याग्रतः ।
तोयं तुच्छमपि प्रयच्छति च यस्तेनैव जीवः पुनः
प्रत्युप्तो बत देशभङ्गचलिते लोके धिगेतां दशाम् ॥ १०४ ॥

वृद्धोक्षः पतति क्षितौ गुरुभराक्रान्तः शताङ्गः क्षतः
कान्ता सान्त्वयति क्षुधापरिगतं स्तन्योज्झिता बालकम् ।
गन्तव्यं च बहु व्यतीत्य गतवान् सार्थः प्रयात्यंशुमान्
अस्तं व्यस्तमहा हहा गृहपतिः कां दुर्दशामागतः ! ॥ १०५ ॥

*

तिष्ठत्येव तवान्तिके सुरतरुर्दानेयदीनात्मनां
आनन्दं नयनद्वयस्य कुरुते चन्द्रोऽपि सान्द्रद्युतिः ।
देवेनाऽपि दितेः सुतान् दलयता नाकश्च निष्कण्टकः
श्रीसिद्धाधिपतिं विधे ! स्वसविधे तत् किं भवान् नीतवान् ॥१०६

तानेव स्तुमहे महेश ! महितां प्रागेव यातान् महीं
यस्मादस्तमिते महात्मनि हहा श्रीकर्णदेवात्मजे ।
स्नात्वा दुस्तरशोकलोकनयनभ्रष्टैर्जलैर्बिभ्रती
शुभ्रं कीर्तिपटं प्रियेण रहिता भूरद्य दृष्टा न यैः ॥ १०७ ॥

सिद्धेशप्रमुखैः पुरा परिहृतं प्राणैरिव क्षोणिपैः
पश्चान्मुक्तममुक्तधर्म्ममतिभिर्बन्धूपमैर्मन्त्रिभिः ।
स्थायं स्थायमथ श्रिया कथमपि त्यक्तं जनन्येव यत्
तत् कैश्चित् पुरमर्धदग्धमधुना ध्वाङ्क्षैर्यथा भक्ष्यते ॥ १०८ ॥

मुण्डेव खण्डितनिरन्तरवृक्षखण्डा
निःकुण्डलेव दलितोज्ज्वलवृत्तवप्रा ।
दूरान्निरस्तविषया विधवेव दैन्य-
मभ्येति गूर्जरधराधिपराजधानी ॥ १०९ ॥

## १०. अथ प्रकीर्णकाव्योक्तयः ।

इयतैव मया ज्ञाता सरसस्तव सारता ।
हंसीभूय बकैर्यत्र राजहंसः परीक्ष्यते ॥ ११० ॥

एकत्रैव सरोवरे विहरणं तुल्यैव देहद्युतिः
पक्षित्वं च सदृक्षमेव विगुणं किं राजहंसान्मम ।
इत्यन्तः सततं वराक ! बक ! रे ! बिभ्रन्न संभ्राम्यसि
प्राप्तेऽप्यन्तिकमुत्तमेऽत्र तदहो ! धिक् त्वां मुधा मानिनम् ॥१११॥

जातीवियोगविधुरस्तपसे गङ्गां जगाम भृङ्गयुवा ।
तत्रापि पद्मिनीनां मधु लब्ध्वाऽधिकतरं मत्तः ॥ ११२ ॥

अयि कृतज्ञ ! बकोट ! बहु त्वया यदुषितं सरसीह निरम्भसि ।
तदधुनाऽपि सहस्व दिनद्वयं यदयमम्बुधरः पुर एव ते ॥ ११३ ॥

मधुपः केतकीगन्धभङ्गिरङ्गितमानसः ।
कण्टकस्योत्कटां पीडां सहते दुस्सहामपि ॥ ११४ ॥

ददति पदानि स्कन्धे दलयन्ति दलानि यदपि कपिनिवहाः ।
सहकारस्य विकारस्तदपि न सर्वंसहस्यासीत् ॥ ११५ ॥

सत्कार्यः सुजनोऽयमागत इतः स्थाता च नासौ चिरा-
दौचित्याय भविष्यति फलस्फीतिर्विलम्बेन मे ।
मैवं भूर्भुवनोपकारचतुर ! त्वं चूतपर्याकुलः
पर्याप्तं यदनेन किं घटनया त्वच्छाययैवानया ॥ ११६ ॥

शाखाशतैर्वसुमतीवलये ! नमामि
लब्ध्वा पुनः फलसमृद्धिमहं नमामि ।
चूतश्चिरं सुरभिदूतरुतैरितीव
दत्ते धनोद्धतधियां विनयोपदेशम् ॥ ११७ ॥

दग्धा मुग्धदलावलीति न फलश्रेणी विशीर्णेति न
श्रान्ताध्वन्यमनःप्रमोदजननी छाया विशीर्णेति न ।
खेदश्चूततरोर्दवार्त्तवपुषः किन्त्वस्य सैव व्यथा
सत्कार्योऽयमसत्कृतः सुहृदितः पुंस्कोकिलो याति यत् ॥ ११८ ॥

आपृष्टोऽसि महीरुहेन्द्र! भवते स्वस्त्यस्तु यामो वयं
लब्धव्यं यदि किञ्चिदस्ति तदितोऽन्यत्रापि लप्स्यामहे।
कल्पोर्वीरुहसेवयाऽप्यभिमता न प्राप्यते श्रीरिति
ख्यातिस्ते भविता पुनर्जगति यत् तेनैव लज्जामहे ॥ ११९ ॥

छायेच्छया तव समीपमुपागतस्तन्-
माकन्दपादप! तथा सुखितस्त्वयाऽहम्।
क्षुद्रः करीरविटपी कटुकण्टकोऽपि
त्यक्तः कुतः पथि मयेति तथा स्मरामि ॥ १२० ॥

उष्णे पूषणि रुषैव पिंषति शिरोदेशान्निशातैः करैर्-
येनाकारि तरूत्तमेन जनतासंतापनिर्वारणम्।
सोऽयं तोयद! दैवदुर्विलसितादेतां गतो दुर्दशा-
माशामस्य तदाशु पूरय परप्रीत्यै यतस्त्वादृशाः ॥ १२१ ॥

आसंसारं शिशिरमधुरैः पूरितस्तोयपूरैः
कासारोऽसौ भवतु भगवन्नम्बुद! त्वत्प्रसादात्।
यः संपूर्णः पृणति पृथिवीं नात्मनैवान्तिकस्थं
वापीकूपप्रभृति च भृतं भोगयोग्यं करोति ॥ १२२ ॥

तुच्छास्वच्छकवोष्णवारिविभवः कासारवर्गः परं
तिग्मांशुस्तपति स्फुरन्ति पुरतो दावस्फुलिङ्गाकुलाः।
इत्थं मृत्युमुखागतस्य पथिकव्रातस्य तत् किञ्चन
न्यग्रोधेन कृतं कृतं न खलु यत् पित्रा च पुत्रेण यत् ॥१२३॥

मासान् मांसलपाटलापरिमलव्यालोलरोलम्बिनः
प्राप्य प्रौढिमिमां समीर! महतीं हन्त त्वया किं कृतम्।
सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य यत्
पादस्पर्शसहं विहाय सितयोः स्थाने रजः स्थापितम् ॥ १२४ ॥

हे विश्वाश्वासनैकव्यसनघन! तव प्रोन्नतस्य प्रसादात्
कासारः स्फारवीचिर्न खलु न भविताऽशेषशोषं गतोऽपि।
किन्तु क्लान्तेऽब्जपुञ्जे चलदलिनि जवात् त्वं पयःसेकमेकं
मुञ्चैतस्मिन् यथाऽसौ शफरपरिकरप्राणिनि प्राणशेषः ॥ १२५ ॥

हे वारिवाह ! सहकारमहीरुहेण
प्राप्ता मनोरथशतैरियमुन्नतिस्ते ।
आविर्भवत्यचिरमुं प्रति संप्रति त्वं
तत् कर्तुमिच्छसि दवोऽपि न यच्चकार ॥ १२६ ॥

सुखमासीनः पश्यति कृतार्थितामात्मना महीमखिलाम् ।
संप्रति निर्व्यापारो निर्मलरुचिरेष घन [:] सुजनः ॥ १२७ ॥

हे कासार ! शिरोऽवतंसविकसत्पद्मासनेन त्वया
पीयूषप्रतिमैर्जलैर्विदलिताः केषां न तृष्णार्त्तयः ।
तं त्वां तीर्थमुपेयुषः कुलपतेरस्याम्बुवृत्तेः कृते
स्वल्पः कोऽपि यदि व्ययः किमियता विश्वोपजीव्यस्य ते ॥१२८॥

कूपोऽयमल्पसलिलस्त्रुटितावशिष्ट-
सप्ताष्टसंकटघटीभृदिहारघट्टः ।
छिद्राकुलं च जलपानपदं तदत्र
भ्रातः ! कथं कथय पास्यसि पान्थ ! पाथः ॥ १२९ ॥

करभ ! सरभसं भज ! त्वमन्यद्
वनमवनं वपुषश्चिकीर्षितं तत् ।
इह विहरति केसरी करीन्द्र-
व्रजविजयोद्धुरकन्धरः पुरस्तात् ॥ १३० ॥

दैवादपास्य पाशान् कुशलिनि दूरं गते कुरङ्गपतौ ।
लुब्धक-जम्बुक-वायसमनोरथा व्यर्थतां याताः ॥ १३१ ॥

भूमीभारं बिभृमह इति स्फारितोत्तुङ्गशृङ्गाः
शैलाः सन्तु प्रसृमरमदाः सन्तु दिग्दन्तिनोऽपि ।
त्वं तु क्षोणीं क्षणमपि फणान्मा मुचः शेष ! तेषां
शक्तिं द्रष्टुं स्फुटमितरथा नावनिर्नोद्धृतास्ते ॥ १३२ ॥

तस्मै तिग्मरुचे नमस्तमसि यो मग्नां व्यनक्ति क्षितिं
वन्द्यः सोऽपि सितद्युतिर्यदुदयात् को नाम नामोदते ? ।
दुश्चेष्टाभिरवग्रहप्रभृतिभिः संख्यापयन्तः पुन-
र्वक्राद्या यदमी समं ग्रहततौ वल्गन्ति तत्कौतुकम् ॥ १३३ ॥

कामं करोतु सुजनेऽपि रुजं कुजन्मा
यस्मादसौ जगति वक्र इति प्रसिद्धः ।
त्वां तु ब्रवीति सवितारमिनं च मित्रं
लोकस्तदर्क ! किमु तापयसि त्वमेनम् ॥ १३५A ॥

सर्वे स्थ हे विहङ्गाः ! कथयत मित्राणि मे द्वयोरेकम् ।
स्थानं वा सततदिनं प्राणानां त्यागमार्गं वा ॥ १३५B ॥

पुनः फलन्त्यस्तफला अपि द्रुमाः
सरांसि रिक्तान्यपि यान्ति पूर्णताम् ।
दृढं विधायाढ्यचरैर्मनस्ततः
प्रतीक्षणीयः समयः समृद्धये ॥ १३६ ॥

पाथेयमत्ति पान्थः सच्छायं दूरतोऽपि तरुमेत्य ।
निजमपि सुखेन भोक्तुं शक्यं हि सदाश्रयेणैव ॥ १३७ ॥

अतिपिशुने पिशुनत्वं जनयन्नपि जगति जायते सुजनः ।
विषमाभोगे रोगे दाहोऽपि हितः शरीराय ॥ १३८ ॥
धनिके निधनमुपेते तद्भार्यायाः पुरोऽधमर्णेन ।
किल दुःखितेन रुदितं मुदश्रुमिश्राक्षियुगलेन ॥ १३९ ॥

खेट ! प्रसिद्धिर्यदिह ग्रहाणां
बभूव युक्तं प्रतिभाति तन्मे ।
यस्मादमी शिष्टजनेऽप्यनिष्टां
दशां दिशन्ते तिलमुष्टिलुब्धाः ॥ १४० ॥

दूरस्थः पथि याति जल्पति पतिद्विष्टैः क्रियोपक्रमे
दृष्टिं मुञ्चति भोजनाय यतते यः स्त्रीषु विश्राम्यति ।
ज्ञानीव प्रहितो महालसतया ब्रूते स्थितो निर्णयं
शेते वक्ति च भूरिकुण्ठमतये वण्ठाय तस्मै नमः ॥ १४१ ॥

चिन्तायामपि नेच्छयाऽभिगमनं स्वस्मै न पाकक्रिया
लब्धं कृच्छ्रशतैरपि प्रतिदिनं पात्रप्रदेयं धनम् ।
एवं पूर्वमनीषिभिः प्रतिहतस्वैरप्रचारे पथि
प्रक्रीडन्ति कृतेन्द्रियप्रियतया ये केऽपि तेभ्यो नमः ॥ १४२ ॥

किं कुर्वतामहह किं शरणं श्रयन्ता-
माख्यान्तु कस्य पशवस्त इमे वराकाः।
येषां सुराश्च पितरश्च नराश्च हिंस्र-
जीवाश्च मांसमुपभोक्तुमुपक्रमन्ते ॥ १४३ ॥

प्रकटयति हृदयदाहं पुरुषः प्रायेण सज्जने मिलिते।
ग्रावा दग्धः सलिले पतिते पुनरुद्गमत्यग्निम् ॥ १४४ ॥

चिन्ताभल्लीं दधद्दुःखां विधिव्याधाहतां हृदि।
दरिद्रहरिणः शून्यो भ्रमत्याशाश्च वीक्षते ॥ १४५ ॥

## ११. अथ शमः।

ऐक्र ते दिवसा रसान्धहृदयैः सश्रद्धमाकर्णिता-
न्यस्माभिर्मधुमत्तवारवनितागीतानि यत्रादरात्।
एते यान्ति पुनः पुराणपुरुषध्यानैकतानात्मना-
मस्माकं मधुराक्षरक्रमशुकव्याहारकौतूहलैः ॥ १४६ ॥

इयद्भिरपि जन्मभिर्न भवता क्षणं शिक्षितं
तदीश! विनिमज्यते वृजिनसागरे दुस्तरे।
प्रबुद्धमधुना मया यदयमाश्रितः श्रीपति-
स्तदुच्छिदुपदेशने स हि गुरुस्त्रिलोकीगुरुः ॥ १४७ ॥

प्रपञ्चः पञ्चेषोः स परिचरितः किञ्च वपुषः
परिज्ञातं तत्त्वं द्रविणपरिणामोऽपि पठितः।
चरित्रं मित्राणामवगतमतः सांप्रतमहो!
महादेवादीहे तदमृतमनास्वादितरसम् ॥ १४८ ॥

नमस्तुभ्यं चेतो भव! सुभगभावोऽसि तदपि
त्वदीयादासङ्गादुपरतमिदं हन्त! हृदयम्।
प्रयागे गङ्गाम्भःप्लवनमनवद्येन पयसा
प्रभासे वा सेवामभिलषति शम्भोर्भगवतः ॥ १४९ ॥

सरस्वत्यां स्नानं शिरसि हरशेषा सुमनसः
प्रसन्ना हृद्वृत्तिः शतपथकथाऽऽकर्णनरसः।
मुनीनामाराध्या परिषदरिषड्वर्गजयिनी
विना पुण्यैनैषा न भवति मनीषा तनुभृताम् ॥ १५० ॥

पराभूतैरेभिः किमिह बहिरङ्गैः परिजनैः
परद्रोहादंहःपविरुपरि येषां पिपतिषुः ।
तदेतज्जेतव्यं जितसितमयूखैर्मृगदृशां
मुखैराविर्भूतैर्भवदवशमाशु स्वहृदयम् ॥ १५१ ॥

नगोपान्ते कान्ते क्वचिदपि निकुञ्जे श्रुतिजपै-
रुपेन्द्रध्यानैर्वा सकलमपि कालं गमयतः ।
हिमाकारं हारि त्रिदशतटिनीवारि पिबतः
कदा कन्दैर्वृत्तिर्मम शमरतेरीश ! भविता ॥ १५२ ॥

हे पुत्राः ! परिपात मातरमिमां गेहादिसर्वं हि वः
स्वं स्वं गच्छत पुत्रिकाः पतिगृहं शीलं च मा मुञ्चत ।
आपृच्छे सुहृदः प्रमोदसदनं भूयास्थ यूयं सदा
यस्मादस्मि समुत्सुकः शुकमुनिक्रान्ते पथि क्रीडितुम् ॥१५३॥

कृता कल्पश्चिन्तामणिभिरिव कल्पद्रुमवने
करोमीव क्रीडां सुरसुरभिवृन्दैर्वृत इव ।
यतः शान्ताऽसौ मे कृपणनृपतिभ्योऽर्थकणिका
कदाऽऽशा दाशार्ह ! त्वदधिगमनाधीनमनसः ॥ १५४ ॥

किमाख्यामस्तेषामविषयमनोभिः स भगवान्
स्वजन्मा यैर्जन्मावधिवदेकः प्रणिहितः ।
नमस्यः सोऽपि स्यान्निवसति जराजर्ज्जरवयाः
प्रयागप्रत्यन्तप्रसृतसलिलायां सरिति यः ॥ १५५ ॥

अर्थार्थिभिर्गुरुगृहे प्रथमं वयस्त-
दर्थार्थिभिर्नृपगृहे गमितं द्वितीयम् ।
मोक्षार्थिनः पुनरिदं त्रिदिवस्रवन्त्या-
स्तीर तृतीयमतिवाहयितुं व्रजामः ॥ १५६ ॥

यस्मादेते विषयाः कर्त्तारं तापयन्ति नरमन्ते ।
तेनैतेषु विषेष्विव विदुषां हृदयानि न रमन्ते ॥ १५७ ॥

हारेण हृदयस्थेन सौधे वित्तवतां न तत् ।
हरेण यत् सुखं नाम वने वल्कलवाससाम् ॥ १५८ ॥

स्वयं श्रीरायातु प्रकृतिचपला यातु यदि वा
शिवाः कश्चिद् वाचो वदतु यदि वा वक्तु विरसाः ।
तथाऽप्येते भ्रातर् न खलु विलसामो न च वयं
विषीदामो द(दा)मोदरचरणचर्यासु रसिकाः ॥ १५९ ॥

अनम्रं नश्चेतः प्रणतिशतलभ्यास्तु विभवा-
श्चटुग्राह्यः स्वामी 'वयमपि समीचीनवचसः ।
तदस्माभिर्लोकव्यवहृतिविभिन्नप्रकृतिभि-
र्वितृष्णं श्रीकृष्णे हृदयमिदमाबद्धमधुना ॥ १६० ॥

चित्तं यस्य न तप्यते परिभवैर्यः श्वेव पिण्डार्थितां
कर्त्तुं कामयते विवेकविकलान् स स्वामिनः सेवताम् ।
यस्तस्मिन् विजिहीर्षुरच्युतपदे क्लेशान् जिहासुश्च यः
सोऽस्माकं सविधे वसिष्ठवचनाधीनात्मनां तिष्ठतु ॥ १६१ ॥

वित्ताय त्वरतां स्त्रियै विकुरुतां प्रक्रीडतु क्रुध्यतु
द्वेष्टु स्निह्यतु वा स एष विषयव्याकृष्टचित्तो जनः ।
एतत् सर्वमतात्त्विकं तु विदता वेदोपदेशान्मया
ह्यस्मिन्नेव मनः समाहितमिदं नित्योदिते ज्योतिषि ॥ १६२ ॥

## १२. अथोपदेशाः ।

सखेऽयमिन्द्रियग्रामः स्वैरित्वादनिवारितः ।
घनच्छन्न इवादित्यः पश्चात्तापं करिष्यति ॥ १६३ ॥

चित्तं दमय मा कूर्चं वृत्तं संस्कुरु मा वपुः ।
गीतां शृणु च मा गीतं पुरुषं पश्य मा स्त्रियम् ॥ १६४ ॥

महती मोहनिद्रेयमहो विषयिणां नृणाम् ।
यदेते शोचतामुच्चैर्नाक्रन्दैरपि जाग्रति ॥ १६५ ॥

जन्म सन् मन्यतां तस्य तीर्णस्तेन महार्णवः ।
कर्त्तुं यागं च योगं च येनारण्याग्रहः कृतः ॥ १६६ ॥

अपलप्य सज्जनानां रहसि कुबुद्धे ! कुकर्म्म किं कुरुषे ।
पश्यति शरीरवर्त्ती पुरुषः किं नैष चरितं ते ॥ १६७ ॥

कृष्णीकृतैः किमेभिर्जरसा कल्माषितैः कचैर्व्यसनिन् ! ।
आत्मानमेव कृष्णीकुरु पुरुषध्यानयोगेन ॥ १६८ ॥

कुरु सुकृतं सुकृतं सुकृतं नित्यमेव कुरु सुकृतम् ।
भवति शुभं शुभं शुभं येन भवति शुभम् ॥ १६९ ॥

*

रे मुग्धमानस ! तव स्वयमेव नास्ति
संसारसंविदि यदि प्रतिभाप्ररोहः ।
तत् किं समातृ-पितृ-पुत्र-कलत्र-मित्र-
विच्छेददं त्वमपि वेत्सि न तत्स्वरूपम् ॥ १७० ॥

नेत्रे निमील्य कतिचिद् दिवसान् सहस्व
श्रेयःसमं किमपि हे हृदय ! प्रसीद ।
विश्वात्मना भगवता सममेकपात्रे
पातुं स्पृहा तदमृतं यदि वर्त्तते ते ॥ १७१ ॥

भुवनविपिने भ्रान्तं तावत् सपल्लवके त्वया
फलमिह न तल्लब्धं चेतःकपे ! यदपेक्षसे ।
स्फुरति यदि ते तस्यास्वादस्पृहा महती ततः
प्रशमितविपत्तापं धर्मद्रुमं द्रुतमाश्रय ॥ १७२ ॥

अभिमतफलारामं कामं स मा स्म करोत् तपः
स्वयमपि कृतं यस्यागारे हरिप्रियया पदम् ।
प्रभवति पुनर्यस्यान्येभ्यो भुजिष्यतया भुजिः
स किमु कुरुते मोघां जन्मद्वयीमिह निस्त्रपाः ॥ १७३ ॥

हे वीर ! स्थविर ! स्थिरो भव ननु प्राप्ता जरेयं ततः
संग्रामाय किमाकुलत्वमधुना धत्से कृतेऽस्याः क्षितेः ।
यस्मात् के निधनं गता न पतयो युद्धा यदर्थे मिथः
सुस्थैवार्थिपरं तदस्ति शकलश्रेण्या हसन्तीव सा ॥१७४॥

तथ्यं वः कथयामि किञ्चिदथवा दक्षाः स्थ यूयं स्वयं
तन्मां ब्रूत नृपास्तदेतदवनेः किं दत्ति-भुक्त्योर्महत् ।
भोक्तारः कति नाभवन्निह परं नाख्याऽपि तेषां क्वचिद्
दाताऽद्यापि तु विद्यते विमलया मूर्त्यैव कीर्त्या बलिः ॥१७५॥

स्वामिन्नब्धिसुतापते ! गमयता पातालमूले बलिं
स्वस्यायं भवता लघुत्वपटहः स्पष्टीकृतः केवलम् ।
यस्मादेष पुरःस्थितेऽर्थिनि जगन्नाथे त्वयि क्षोणिका
मात्रोत्सर्जनलज्जया स्वयमधो गन्तुं ततोऽपीच्छति ॥ १७६ ॥

*

वित्तं तदखिलमपि परिगलितं,
प्रादुर्भूतं शिरसि च पलितम् ।
तदपि न हृदयं विषयवितृष्णं,
संसेवितुमभिलष्यति कृष्णम् ॥ १७७ ॥

इयमपि दशनश्रेणी पतिता,
सा च समाप्ता जगदधिपतिता ।
तज्जगदाश्रयमाश्रय देवं,
हृदय ! विरंस्यसि दुःखादेवम् ॥ १७८ ॥

सत्पात्रेषु न दत्तं दानं,
मन्ये तत् तव दौस्थ्यनिदानम् ।
प्रणतः क्वचिदपि न स गोविन्दः,
तदयं प्रहरति कालपुलिन्दः ॥ १७९ ॥

तृणमिव गणयति जगदपि मूढः,
चञ्चलकमलामदमधिरूढः ।
विपदि तु पतितः प्रतिजनमास्यं,
दीनः पश्यति याति च दास्यम् ॥ १८० ॥

सधनः कुरुते जगदुपहासं,
रचयति नीचैः सह संवासम् ।
विभवे नीते भवति विनीतः,
चरति रजन्यामृणभयभीतः ॥ १८१ ॥

तावत् पापं चरति हताशः,
कण्ठे यावन्न पतति पाशः ।
पाशे पतिते निन्दति दैवं,
वदति च हन्त ! करिष्ये नैवम् ॥ १८२ ॥

गायति नृत्यति विभवक्षीवः,
प्रतिपदमुद्धतबुद्धिरतीव ।
परतरुणीहरणाय च धावन्,
न विधेर्वेत्ति खलस्य हि भावम् ॥ १८३ ॥

कोऽयं कुमते! परिजनगर्वः,
श्रयति हि लक्ष्मीलुब्धः सर्वः ।
त्वामयमधनं मुक्त्वा लोकः,
पुनरपि यास्यति धनिनामोकः ॥ १८४ ॥

धनमिदमास्ते यावदधीनं,
वपुरपि तिष्ठति यावत्पीनम् ।
तावज्जागृहि सुकृतविधाने,
निजमपि परगं स्यादवसाने ॥ १८५ ॥

यद् यदुपात्तं वित्तमकृत्यैर्,
गिलितं तदखिलमपि दुर्भृत्यैः ।
हतमतिरधुना सोऽयं दीनः,
सहजे सीदति कृतकौपीनः ॥ १८६ ॥

भवति विदग्धः किमपि विदित्वा,
धीरंमन्यश्चित्तमजित्वा ।
नैतत् पश्यति यन्मम कार्यं,
कोऽयं विलसति विपुलापाये ॥ १८७ ॥

ये दिवसस्य प्रथमे यामे,
दृष्टा नष्टास्तेऽपि विरामे ।
येषां भवने कलभविलासः,
संप्रति तेषामपि वनवासः ॥ १८८ ॥

क्व हरिश्चन्द्रः क्वान्त्यजदास्यं,
क्व पृथासूनुः क्व च नटलास्यम् ।
क्व च वनकष्टं क्वासौ रामः,
कद्रे विकटो विधिपरिणामः ॥ १८९ ॥

समजनि सफलं जन्म ममाद्य,
त्वमपि कृतार्थं मानस! माद्य।
हरधरणीधरधवलतरङ्गा,
यदियं प्रत्यासीदति गङ्गा ॥ १९० ॥

अविरलविगलल्लालाजालं,
शशधरकरनिकरोज्ज्वलवालम्।
निजमिदमधुना मातर्गङ्गे!,
वपुरिह निहितं भवदुत्सङ्गे ॥ १९१ ॥

यदि तव हृदयं दहति स पापः,
संसारज्वरजनितस्तापः।
शिवनयनाग्निकथितं पथ्यं,
तत् पिब गङ्गाजलमिति तथ्यम् ॥ १९२ ॥

सुकृतं सुकृतं तस्य भणामः,
परवनितायां यस्य न कामः।
निपतति मूर्द्धनि गङ्गापाथः,
चेतसि नित्यं स जगन्नाथः ॥ १९३ ॥

वहति विपद्यपि यः परितोषं,
जल्पति पिशुनस्यापि न दोषम्।
सततं तनुधनवानपि दाता,
जगति स मर्त्त्यमिषेण विधाता ॥ १९४ ॥

भवदवदाहोपद्रवभग्नः,
तस्मिन् परमानन्दे मग्नः।
सुकृती निवसति निर्मलनीरे,
भगवति भागीरथि! तव तीरे ॥ १९५ ॥

कोऽपि कथञ्चन मज्जति जन्तुः,
व्यसनावर्त्ते विरचितमन्तुः।
सुखमिह किञ्चन न हि संसारे,
तदितस्त्वं मामव कंसारे! ॥ १९६ ॥

## १३. अथ श्रीकृष्णप्रार्थना ।

कृतानि पुण्यानि मया न पूर्वमेवंविधां तेन दशां गतोऽस्मि ।
संप्रत्यहं त्वां शरणं प्रपन्नो यदू रोचते तत् कुरु देवदेव ! ॥ १९७ ॥

तवाग्रतो देव ! निजामवस्थां पुनः पुनर्विज्ञपयन् बिभेमि ।
परं त्वमेकोऽसि पतिस्त्रिलोक्यास्तदर्थये नाथ ! कमन्यमत्र ॥ १९८ ॥

कर्त्तुं नवं भगवतः स्तवमक्षमोऽहं
मोहं विहाय न भजामि भवन्तमेव ।
यद्येतया हृदयवासनयाऽसि तुष्ट-
स्तद्विष्टपाधिप ! कृपां कुरु पुत्रकेऽस्मिन् ॥ १९९ ॥

दुःकृतं कृतमपि व्यपोहसि त्वं मदीयमिदमच्युतः स्मृतः ।
नाथ ! तत्प्रथममेव मे कथं कापथान्न कुरुषे मनः पृथक् ॥ २०० ॥

हृषीकैर्विहितं कर्म हृषीकेश ! हरस्व मे ।
स्वामी भृत्यापराधानामपनेता यतः स्मृतः ॥ २०१ ॥

अयमहमयताऽऽत्मना कृतेन
प्रतिकुलमाकुलितोऽस्मि कश्मलेन ।
विपदपहरणप्रवीण ! तन्मे
कुरु करुणामरुणानुजध्वज ! त्वम् ॥ २०२ ॥

स्वामिन् ! न कुप्यसि हरे ! यदि तद् वदामि
तुल्यस्त्वया न खलु कर्मकरः परोऽस्ति ।
संसारिणां स्मृतिभृतेश्चिरसंभृतं यद्
दुःकर्मपुञ्जमपसारयसि त्वमेकः ॥ २०३ ॥

बध्नाति श्रीतनयः श्रीपतिरखिलं विमोचयत्येतत् ।
पुत्रकृते ह्यपराधे पितैव कुरुते प्रतीकारम् ॥ २०४ ॥

अनन्यसदृशं द्वन्द्वं तदेतदिह दृश्यताम् ।
न संसारसमो रोगो न गोविन्दसमो भिषक् ॥ २०५ ॥

दौस्थ्ये त्राता भये पाता पातके पविता च यः ।
अस्मन्मनसि वास्तव्यः सोऽस्तु कौस्तुभलाञ्छनम् ॥ २०६ ॥

क० ४

कामं कर्म पुरा शुभं न कृतमित्यस्मिन् महादुस्तरे
दुःखाब्धौ पतितोऽस्मि साधु तदिदं धर्माद्धि शर्मागमः ।
चिन्त्यं किन्तु तदीश ! भुवनत्राणक्षमोऽप्याश्रितं
यन्मज्जन्तमुपेक्षसे त्वमिह मां किं तेन सा वाच्यता ॥२०७॥

या काऽपि त्वदुपासनव्यसनिता तां वेत्सि चान्तर्गतो
जाता यत् सुकृपा तवैव जगदुद्धर्तुं त्वमेकः क्षमः ।
एवं सत्यपि सत्यलोकसदन ! त्वत्सेवकोऽयं जनः
खिन्नो याति गृहान्तरेषु किमियं नेर्ष्याऽपि लज्जाऽपि ते ॥२०८

अन्तः संततमत्सरव्यतिकराः क्षोणीश्वराः सन्तु वा
निर्मर्यादमुदीरयन्तु यदि वा दोषानलीकान् खलाः ।
दैवं वाऽपि विरुद्धमस्तु दधतामत्युग्रतां वा ग्रहा
भक्तिश्चेत् त्वयि भक्तवत्सल ! ततः क्षेमक्षितिर्नैव मे ॥२०९॥

विपदपसृता श्रीरायाता हताः परिपन्थिनः
फलितमखिलैर्निःपर्यायं मनोरथपादपैः ।
यदमृतसरस्तीरे रङ्गत्तरङ्गमनोज्ञया
तव धवलया दृष्ट्या दिष्ट्या गिरीश ! निरीक्षितः ॥ २१० ॥

न तं मनो वनोद्देशं दग्धुं भवदवः क्षमः ।
यत्रास्ति हृतसंतापः कृष्णो मेघ इवोन्नतः ॥ २११ ॥

सूनुः सच्चरितः सती सहचरी स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ।
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपदुःखहारिणि हरौ संपद्यते देहिनाम् ॥ २१२ ॥

स मे क्षणः कदा यत्र वीक्ष्यस्त्वमसमेक्षणः ।
हिमालयात्मजाकान्त ! विराजन्नहिमालया ॥ २१३ ॥

*

दामोदर ! श्रीधर ! कृष्ण ! केशव !
श्रीवत्स ! विश्वम्भर ! भक्तवत्सल !
अस्मिन्नगाधे भवसागरे हरे !
मज्जामि मज्जाम्यहमुद्धरोद्धर ॥ २१४ ॥

देव ! त्वमेव जनको जननी त्वमेव
स्वामी त्वमेव परमार्थगतिस्त्वमेव ।
तद्दुस्तरे दुरितवारिधिवारिपूरे
मज्जन्तमुद्धर गदाधर पुत्रकं वा ॥ २१५ ॥

*

त्वमपि न तथा तात ! ध्यातः प्रमादितया मया
फलमभिमतं निःशङ्कस्त्वां यथाऽहमिहार्थये ।
तदपि करुणात्मानं मत्त्वा भवन्तमुपाश्रित-
स्तदवतु जवान्मामेतस्माद् भवाभिभवाद् भवान् ॥ २१६ ॥

*

संसारस्थलदुःस्थानां प्राणिनां प्रीतिहेतवे ।
श्रीसोमेश्वरदेवेन कृता कर्णामृतप्रपा ॥ २१७ ॥

इति श्रीठक्कुर - सोमेश्वरदेव - विरचिता

## कर्णामृतप्रपा सुभाषितावली संपूर्णा ।

*

प्रान्ते पुस्तकप्रतिलिपिकर्तृकपद्यद्वयम् ।

नवाभ्रशरचन्द्रैस्तु निर्मिते वत्सरे वरे ।
चैत्रमास्यसिते पक्षे दशम्यां भूमिनन्दने ॥ १ ॥

षट्पद्रनागरेणेयं महिराजेन धीमता ।
सुभाषितप्रपा नाम्ना लिखिता रुचिराक्षरैः ॥ २ ॥

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

॥ संवत् १५ (१५०९?) कल्याणमस्तु ॥ श्रीः ॥ मङ्गलमस्तु ॥

*

सोमेश्वरकविकृता

# सज्जन-दुर्जनवर्णना

[ कीर्तिकौमुदीकाव्यान्तर्गता ]

*

हृदा यादःपरित्यक्ता निर्व्याला मलयद्रुमाः ।
अमालिन्यकृतो दीपाः श्रीपात्रं सन्तु साधवः ॥ १ ॥

साधूनां लुब्धता काचिदचिन्त्यैव तथाहि ये ।
परेषामेव गृह्णन्ति गुणान् भूरिगुणा अपि ॥ २ ॥

रमयन्ति न कं नाम सन्तश्छायाद्रुमा इव ।
पुष्यन्ति स्मितपुष्पं ये सूचितोच्चैः फलोदयम् ॥ ३ ॥

अमृतैर्मानसं मन्ये सम्पूर्णं सततं सताम् ।
स्यन्देनेव तदीयेन वाचो मुञ्चन्ति नार्द्रताम् ॥ ४ ॥

अश्रुप्रवर्तकैर्धूमैरिव किं तैरसाधुभिः ।
रसवत्यां कवेरुक्तौ मालिन्यं जनयन्ति ये ॥ ५ ॥

वृश्चिकानां भुजङ्गानां दुर्जनानां च वेधसा ।
विभज्य नियतं न्यस्तं विषं पुच्छे मुखे हृदि ॥ ६ ॥

अस्मिन् कलौ खलोत्सृष्टदुष्टवाग्बाणदारुणे ।
कथं जीवेज्जगन्न स्युः सन्नाहाः सज्जना यदि ॥ ७ ॥

निदानं नात्र पश्यामि यदुपेत्यापि दुर्जनाः ।
आक्रोशन्ति भृशं साधूनध्वगानिव कुर्कुराः ॥ ८ ॥

दोषज्ञैस्तेन राज्ञेव सह साधनरा सभा ।
त्याज्याऽवकरभूमीव सहसा घनरासभा ॥ ९ ॥

दुर्जनैस्तर्ज्यमानस्य साधोरधिकमेधते ।
भस्मभिर्मृज्यमानस्य मुकुरस्येव चारुता ॥ १० ॥

आस्तां तावत् कृतक्रोधः, सप्रमोदोऽपि दुर्जनः ।
कष्टाय जायते हृष्टो रतवानिव वायसः ॥ ११ ॥

दुर्जनानां द्विजिह्वत्वख्यातिरेषा मृषैव यत् ।
विश्वोपतापिनां तेषामुचिता सप्तजिह्वता ॥ १२ ॥

अस्मिन्नसमयारण्ये खलवेतालसङ्कुले ।
चरतः सज्जनालापाः शिखाबन्धी भवन्तु मे ॥ १३ ॥

सोऽस्ति कश्चन यो दृष्टोऽप्यशुद्धानां विशुद्धये ।
तेऽपि तिष्ठन्ति ये दृष्टाः शुद्धानामप्यशुद्धये ॥ १४ ॥

*

## संसारस्थितिवर्णना ।

*

अहो ! संसारकारान्तर्मायानिगडितात्मनाम् ।
जायते जातु जन्तूनां न कथञ्चन निर्वृतिः ॥ १ ॥

केचिद् द्युम्नाय धावन्ति प्रद्युम्नाय च केचन ।
नोद्युङ्क्ते कोऽपि धर्माय सर्वाभिप्रेतहेतवे ॥ २ ॥

मोदमानोऽन्तरात्मैव साक्षी यत्कर्म शर्मणे ।
तमप्युपेक्षते धर्ममहो ! मूढमना जनः ॥ ३ ॥

यस्मिन् सन्निहिते वह्नि-विषाद्याः प्रभवन्ति न ।
धर्मादप्यपरस्तस्मात् कः शरण्यः शरीरिणाम् ? ॥ ४ ॥

धर्मसिद्धौ ध्रुवा सिद्धिर्द्युम्न-प्रद्युम्नयोरपि ।
दुग्धोपलम्भे सुलभा सम्पत्तिर्दधि-सर्पिषोः ॥ ५ ॥

उच्चैर्गर्वे समारोप्य नरं श्रीराशु नश्यति ।
दौःस्थ्यदत्तावलम्बोऽथ स तस्मादवरोहति ॥ ६ ॥

जितं लक्ष्मि ! त्वया यस्यै जनस्तमपि सेवते ।
धनं निकारपूर्वं यत् प्रदत्ते प्रेतनाथवत् ॥ ७ ॥

धनस्याधर्मलब्धस्य मुग्धो लाभेन तुष्यति ।
सुकृतस्य दुरापस्य न तु हानिमवेक्षते ॥ ८ ॥

आसाद्यते यया स्वर्गः श्रिया सन्मार्गदत्तया ।
त्यक्त्वा तामप्यधर्मेण मूर्खाः क्रीणन्ति दुष्कृतिम् ॥ ९ ॥

स्वयमुत्पादितां लक्ष्मीं पुत्रीमिव मनीषिणः ।
दत्त्वा पात्राय तद्दानफलमेवोपभुञ्जते ॥ १० ॥

पित्राद्यैरुपभुक्ता या पुत्राद्यैरपि भोक्ष्यते ।
कामयन्ते न तां सन्तो ग्रामवेश्यामिव श्रियम् ॥ ११ ॥

तस्करैर्वा दुरीशैर्वा हृतं संसहते धनम् ।
कदर्यो नैव सत्कार्ये कल्पयत्यल्पमप्यदः ॥ १२ ॥

अन्धा एव धनान्धाः स्युरिति तथ्यं तथाहि ये ।
अन्योक्तेनाध्वना गच्छन्त्यन्यहस्तावलम्बिनः ॥ १३ ॥

धनी धनात्यये जाते दूरं दुःखेन दूयते ।
दीपहस्तः प्रदीपेऽस्ते तमसा बाध्यतेऽधिकम् ॥ १४ ॥

आदावेव विकारं यः प्रदर्शयति देहिनाम् ।
भवोच्छेदैकभावेभ्यो विभवः स्वाद्यते स किम् ? ॥ १५ ॥

न संसारस्य वैरस्यमिदं वेत्ति जडो जनः ।
यत् सुखं स सुखाभासो यद् दुःखं दुःखमेव तत् ॥ १६ ॥

रमयन्ति मनस्तावद् भावाः संसारसम्भवाः ।
यावन्न श्रूयते साश्रुलोकपूत्कारकाहला ॥ १७ ॥

अहो ! देहभृतां मोहः प्ररोहति महानयम् ।
यदेते सुखमिच्छन्ति विषयैर्दुःखहेतुभिः ॥ १८ ॥

छत्रच्छायाच्छलेनामी धात्रा चक्रे निवेशिताः ।
भ्रमन्तोऽपि स्वमात्मानं मन्वते स्थिरमीश्वराः ॥ १९ ॥

मदान्धास्ते परं लोकं कथं पश्यन्तु भूभुजः ।
तमोमण्डलमध्यस्थाश्छत्रच्छायाच्छलेन ये ॥ २० ॥

सुखं विषयसेवेति सक्तास्तत्रैव जन्तवः ।
यः प्रमोदस्तु तत्त्यागात् तदास्वादः क्वचिद् यदि ॥ २१ ॥

अवश्यं नश्वरे देहे दुर्दमे च यमे द्विषि ।
हास्यमास्याद् विनिर्याति यत् पुंसामिदमद्भुतम् ॥ २२ ॥

कालेन शौनिकेनेव नीयमानो जनः पशुः ।
क्षिपत्येष धिगासन्ने मुखं विषयशार्दूले ॥ २३ ॥

कायः कर्मकरोऽयं तन्मात्र कार्याऽतिलालना ।
भृतिमात्रोचितो ह्येष प्रपुष्टो विचिकीर्षते ॥ २४ ॥

प्रयोजकान्यकार्येषु नश्यन्त्याशु महापदि ।
दुर्मित्राणीव खान्येव बन्धुबुद्धिरधीमताम् ॥ २५ ॥

योऽयं जीवितभूतेषु स्नेहग्रन्थिः सुतादिषु ।
विभागावसरे पुंसां व्यक्तः सोऽपि भविष्यति ॥ २६ ॥

दुःखाग्निर्वा स्मराग्निर्वा क्रोधाग्निर्वा हृदि ज्वलन् ।
न हन्त शान्तिमायाति देहिनामविवेकिनाम् ॥ २७ ॥

अविद्यामेव सेवन्ते हन्त! विद्यां व्युदस्य ये ।
ते दूत्यामनुरज्यन्ते वरारोहाविहायिनः ॥ २८ ॥

तटस्थः प्रेक्षते योगी जगदस्मिन् भवार्णवे ।
मज्जनोन्मज्जने कुर्वद् दुष्कृतैः सुकृतैर्निजैः ॥ २९ ॥

विषयामिषमुत्सृज्य दण्डमादाय ये स्थिताः ।
संसारसारमेयोऽसौ बिभ्यत् तेभ्यः पलायते ॥ ३० ॥

सत्यं संसृतिगर्तेयं दुःखैः पूर्णा निरन्तरम् ।
यतस्तद्व्यतिरेकेण नान्यत् किञ्चिदिहाप्यते ॥ ३१ ॥

विधौ विध्यति सक्रोधे वर्म धर्मः शरीरिणाम् ।
स एव केवलं तस्मादस्माकं जायतां गतिः ॥ ३२ ॥



## प्रकीर्णसूक्तानि

हप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किन्तु
संस्कारमत्र मणिकारगणः करोति ॥ २, ११३

*

विद्युदञ्चलचलाचलां श्रियं सन्निवेश्य सचिवेषु साधुषु ।
संप्रहारभरसंभृतश्रमाः शेरते सुखममी क्षमासुजः ॥ ३, ६३
सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः ।
तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति ॥ ३, ६८
जायते जलदवृन्दवृष्टिभिः शाखिनां सफलता शनैः शनैः ।
तुष्यतां क्षितिभृतां नु दृष्टिभिस्तत् क्षणादपि नृणां फलोदयः ॥ ३, ६९
नास्ति तीर्थमिह पार्थिवात् परं यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं संपदेति च समीहिता सताम् ॥ ३, ७०

*

येन केन च सुधर्मकर्मणा भूतलेऽत्र सुलभा विभूतयः ।
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम् ॥ ३, ६४
न सर्वथा कश्चन लोभवर्जितः करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः परत्र बाधा न यथाऽत्र वाच्यता ॥ ३, ७९

*

बलिनाऽप्यरिणा रणप्रवृत्तौ सुभटानां हि पदानि सम्मुखानि ॥

*

विमृशन् बहुशोऽपि सन्दिहानो न जनो निश्चिनुते स्थितिं गतिं वा ॥

*

जलधिर्विगतैरुपागतैः स्यान्नहि भिद्योद्ध्यजलैः क्षयी चयी वा ॥

*

असक्तमासक्तमभीप्सितेऽर्थे कालातिपातं नहि वेत्ति चेतः ॥

*

महात्मनामीहितकार्यसिद्धौ विधिर्विधित्ते हि सदानुकूल्यम् ॥

*

न केवलं स्वेन कृतार्थितेन परैः कृतार्थैः कृतिनः कृतार्थाः ॥

*

उपक्रमे पुण्यकृतां क्रियाणां राभस्यमभ्यस्यति को न साधुः ॥

*

स्वभावशुद्धाः सुधियो हि तेषां पावित्र्यलाभाय तथापि लोभः ॥



# परिशिष्टम्

## कर्णामृतप्रपायाः पद्यानुक्रमणिका



राजस्थान सरकार

# राजस्थान प्राच्यविद्या प्रतिष्ठान

## ( Rajasthan Oriental Research Institute )

जोधपुर



# सूची-पत्र

## राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक–पद्मश्री जिनविजय मुनि, पुरातत्त्वाचार्य

मई, १९६३ ई०

# राजस्थान पुरातन ग्रन्थ-माला

प्रधान सम्पादक—पद्मश्री मुनि जिनविजय, पुरातत्त्वाचार्य

## प्रकाशित ग्रन्थ

### १. संस्कृत, प्राकृत, अपभ्रंश

१. प्रमाणमंजरी, तार्किकचूड़ामणि सर्वदेवाचार्यकृत, सम्पादक — मीमांसान्यायकेसरी पं० पट्टाभिरामशास्त्री, विद्यासागर। मूल्य—६.००

२. यन्त्रराजरचना, महाराजा-सवाईजयसिंह-कारित। सम्पादक—स्व० पं० केदारनाथ ज्योतिर्विद्, जयपुर। मूल्य—१.७५

३. महर्षिकुलवैभवम्, स्व० पं० मधुसूदनओझा-प्रणीत, भाग १, सम्पादक—म० म० पं० गिरिधरशर्मा चतुर्वेदी। मूल्य—१०.७५

४. महर्षिकुलवैभवम्, स्व० पं० मधुसुदनओझा प्रणीत, भाग २, मूलमात्रम् सम्पादक—पं० श्रीप्रद्युम्न ओझा। मूल्य—४.००

५. तर्कसंग्रह, अन्नंभट्टकृत, सम्पादक—डॉ. जितेन्द्र जेटली, एम.ए., पी—एच. डी., मूल्य—३.००

६. कारकसंबंधोद्योत, पं० रभसनन्दीकृत, सम्पादक—डॉ० हरिप्रसाद शास्त्री, एम. ए., पी-एच. डी.। मूल्य—१.७५

७. वृत्तिदीपिका, मौनिकृष्णभट्टकृत, सम्पादक—स्व.पं. पुरुषोत्तमशर्मा चतुर्वेदी, साहित्याचार्य। मूल्य—२.००

८. शब्दरत्नप्रदीप, अज्ञातकर्तृक, सम्पादक—डॉ. हरिप्रसाद शास्त्री, एम. ए., पी-एच.डी.। मूल्य—२.००

९. कृष्णगीति, कवि सोमनाथविरचित, सम्पादिका—डॉ. प्रियबाला शाह, एम. ए., पी-एच. डी., डी. लिट्। मूल्य—१.७५

१०. नृत्तसंग्रह, अज्ञातकर्तृक, सम्पादिका—डॉ. प्रियबाला शाह, एम. ए., पी-एच. डी., डी. लिट्। मूल्य—१.७५

११. शृङ्गारहारावली, श्रीहर्षकवि-रचित, सम्पादिका—डॉ. प्रियबाला शाह, एम. ए., पी-एच.डी., डी.लिट्। मूल्य—२.७५

१२. राजविनोदमहाकाव्यम्, महाकवि उदयराजप्रणीत, सम्पादक—पं० श्रीगोपालनारायण बहुरा, एम. ए., उपसञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर। मूल्य—२.२५

१३. चक्रपाणिविजय महाकाव्य, भट्टलक्ष्मीधरविरचित, सम्पादक—पं० श्रीकेशवराम काशीराम शास्त्री। मूल्य—३.५०

१४. नृत्यरत्नकोश (प्रथम भाग), महाराणा कुम्भकर्णकृत, सम्पादक—प्रो. रसिकलाल छोटालाल पारिख तथा डॉ० प्रियबाला शाह, एम. ए., पी-एच. डी., डी. लिट्। मूल्य—३.७५

१५. उक्तिरत्नाकर, साधसुन्दरगणिविरचित, सम्पादक—पद्मश्री मुनि श्रीजिनविजयजी, पुरातत्त्वाचार्य, सम्मान्य संचालक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर। मूल्य—४.७५

१६. दुर्गापुष्पाञ्जलि, म०म० पं० दुर्गाप्रसादद्विवेदिकृत, सम्पादक—पं० श्रीगङ्गाधर द्विवेदी, साहित्याचार्य। मूल्य—४.२५

१७. कर्णकुतूहल, महाकवि भोलानाथविरचित, इन्हीं कविवर की अपर संस्कृतकृति श्रीकृष्णलीलामृतसहित, सम्पादक—पं० श्रीगोपालनारायण बहुरा, एम. ए., मूल्य—१.५०

१८. ईश्वरविलासमहाकाव्यम्, कविकलानिधि श्रीकृष्णभट्ट विरचित, सम्पादक—भट्ट श्रीमथुरानाथशास्त्री, साहित्याचार्य, जयपुर। स्व. पी. के. गोड़े द्वारा अंग्रेजी में प्रस्तावना सहित। मूल्य—११.५०

१९. रसदीर्घिका, कविविद्यारामप्रणीत, सम्पादक—पं० श्रीगोपालनारायण बहुरा, एम.ए. मूल्य—२.००

२०. पद्यमुक्तावली, कविकलानिधि श्रीकृष्णभट्टविरचित, सम्पादक—भट्ट श्रीमथुरानाथ शास्त्री, साहित्याचार्य। मूल्य—४.००

२१ काव्यप्रकाशसंकेत भाग १ भट्टसोमेश्वरकृत, सम्पा०—श्रीरसिकलाल छो० पारीख, अंग्रेजी में प्रस्तावना एवं परिशिष्ट सहित मूल्य—१२.००

२२. काव्यप्रकाशसंकेत, भाग २ भट्टसोमेश्वरकृत, सम्पा०--श्रीरसिकलाल छो० पारीख, मूल्य--८.२५

२३. वस्तुरत्नकोष, अज्ञातकर्तृक, सम्पा०--डॉ० प्रियबाला शाह। मूल्य--४.००

२४. दशकण्ठवधम्, पं० दुर्गाप्रसादद्विवेदिकृत, सम्पा०--पं० श्रीगङ्गाधर द्विवेदी। मूल्य--४.००

२५. श्री भुवनेश्वरीमहास्तोत्रम्, सभाष्य, पृथ्वीधराचार्यविरचित, कवि पद्मनाभकृत, भाष्य-सहित पूजापञ्चाङ्गादिसंवलित। सम्पा०--पं. श्रीगोपालनारायण बहुरा। मूल्य--३.७५

२६. रत्नपरीक्षादि-सप्त ग्रन्थ-संग्रह, ठक्कुर फेरु विरचित, संशोधक--पद्मश्री मुनि जिनविजय, पुरातत्त्वाचार्य। मूल्य--६.२५

२७. स्वयंभूछन्द, महाकवि स्वयंभूकृत, सम्पा० प्रो० एच. डी. वेलणकर। विस्तृत भूमिका (अंग्रेजी में) एवं परिशिष्टादि सहित मूल्य--७.७५

२८. वृत्तजातिसमुच्चय कवि विरहाङ्करचित, ,, ,, ,, मूल्य--५.२५

२९. कविदर्पण, अज्ञातकर्तृक, ,, ,, ,, मूल्य--६.००

३०. कर्णामृतप्रपा, भट्ट सोमेश्वर कृत सम्पा०--पद्मश्री मुनि जिनविजय। मूल्य--२.२५

## २. राजस्थानी और हिन्दी

३१. कान्हडदेप्रबन्ध, महाकवि पद्मनाभविरचित, सम्पा०--प्रो० के.बी. व्यास, एम. ए.। मूल्य--१२.२५

३२. क्यामखां-रासा, कविवर जान-रचित, सम्पा०--डॉ. दशरथ शर्मा और श्रीअगरचन्द नाहटा। मूल्य--४.७५

३३. लावा-रासा, चारण कविया गोपालदानविरचित, सम्पा०--श्रीमहताबचन्द खारैड़। मूल्य--३.७५

३४. वांकीदासरी ख्यात, कविराजा वांकीदासरचित, सम्पा०--श्रीनरोत्तमदास स्वामी, एम. ए., विद्यामहोदधि। मूल्य--५.५०

३५. राजस्थानी साहित्यसंग्रह, भाग १, सम्पा०--श्रीनरोत्तमदास स्वामी, एम.ए.। मूल्य--२.२५

३६. राजस्थानी साहित्यसंग्रह, भाग २, सम्पा०--श्रीपुरुषोत्तमलाल मेनारिया, एम. ए., साहित्यरत्न। मूल्य--२.७५

३७. कवीन्द्र कल्पलता, कवीन्द्राचार्य सरस्वतीविरचित, सम्पा०--श्रीमती रानी लक्ष्मीकुमारी चूंडावत। मूल्य--२.००

३८. जुगलविलास, महाराज पृथ्वीसिंहकृत, सम्पा०--श्रीमती रानी लक्ष्मीकुमारी चूंडावत। मूल्य--१.७५

३९. भगतमाळ, ब्रह्मदासजी चारण कृत, सम्पा०--श्री उदैराजजी उज्ज्वल। मूल्य--१.७५

४०. राजस्थान पुरातत्त्व मन्दिरके हस्तलिखित ग्रंथोंकी सूची, भाग १। मूल्य--७.५०

४१. राजस्थान प्राच्यविद्या प्रतिष्ठानके हस्तलिखित ग्रन्थोंकी सूची, भाग २। मूल्य--१२.००

४२. मुंहता नणसीरी ख्यात, भाग १, मुंहता नैणसीकृत, सम्पा०--श्रीबद्रीप्रसाद साकरिया। मूल्य--८.५०

४३. ,, ,, ,, ,, २, ,, ,, ,, मूल्य--९.५०

४४. रघुवरजसप्रकास, किसनाजी आढाकृत, सम्पा०--श्री सीताराम लाळस। मूल्य--८.२५

४५. राजस्थानी हस्तलिखित ग्रन्थ-सूची, भाग १ सं. पद्मश्री मुनि श्रीजिनविजय। मूल्य--४.५०

४६. राजस्थानी हस्तलिखित ग्रन्थ-सूची, भाग २--सम्पा०--श्री पुरुषोत्तमलाल मेनारिया एम.ए., साहित्यरत्न। मूल्य--२.७५

४७. वीरवाण, ढाढ़ी बादरकृत, सम्पा०--श्रीमती रानी लक्ष्मीकुमारी चूंडावत। मूल्य--४.५०

४८. स्व० पुरोहित हरिनारायणजी विद्याभूषण-ग्रन्थ-संग्रह-सूची, सम्पा०--श्रीगोपाल नारायण बहुरा, एम. ए. और श्रीलक्ष्मीनारायण गोस्वामी, दीक्षित। मूल्य--६.२५

४९. सूरजप्रकास, भाग १--कविया करणीदानजी कृत, सम्पा०--श्री सीताराम लाळस। मूल्य--८.००

५०. ,, ,, २ ,, ,, ,, मूल्य--९.५०

५१. नेहतरंग, रावराजा बुधसिंह कृत --सम्पा० श्री रामप्रसाद दाधीच एम.ए. मूल्य--४.००

५२ मत्स्यप्रदेश की हिन्दी-साहित्य को देन प्रो. मोतीलाल गुप्त, एम.ए., पी-एच.डी. मूल्य--७.००

५३. वसन्तविलास फागु, अज्ञातकर्तृक, सम्पा०--श्री एम. सी. मोदी। मूल्य--५.५०

# प्रेसों में छप रहे ग्रंथ

## संस्कृत

१. शकुनप्रदीप, लावण्यशर्मरचित, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
२. त्रिपुराभारतीलघुस्तव, धर्माचार्यप्रणीत, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
३. बालशिक्षाव्याकरण, ठक्कुर संग्रामसिंहरचित, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
४. पदार्थरत्नमंजूषा, पं० कृष्णमिश्रविरचित, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
५. नन्दोपाख्यान, अज्ञातकर्तृक, सम्पा०-श्री बी.जे. सांडेसरा ।
६. चान्द्रव्याकरण, आचार्य चन्द्रगोमिविरचित, सम्पा०-श्री बी. डी. दोशी ।
७. प्राकृतानन्द, रघुनाथकविरचित, सम्पा०-पद्मश्री मुनि श्री जिनविजय ।
८. कविकौस्तुभ, पं० रघुनाथरचित, सम्पा०-श्री एम. एन. गोरे ।
९. एकाक्षर नाममाला—सम्पा०-मुनि श्री रमणिकविजय ।
१०. नृत्यरत्नकोश, भाग २, महाराणा कुंभकर्णप्रणीत, सम्पा०-श्री आर. सी. पारीख और डॉ. प्रियबाला शाह ।
११. इन्द्रप्रस्थप्रबन्ध, सम्पा०-डॉ. दशरथ शर्मा ।
१२. हमीरमहाकाव्यम्, नयचन्द्रसूरिकृत, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
१३. स्थूलिभद्रकाकादि, सम्पा०-डॉ० आत्माराम जाजोदिया ।
१४. वासवदत्ता, सुबन्धुकृत, सम्पा०-डॉ० जयदेव मोहनलाल शुक्ल ।
१५. वृत्तमुक्तावली, कविकलानिधि श्रीकृष्ण भट्ट कृत; सं० पं० भट्ट श्री मथुरानाथ शास्त्री ।
१६. आगमरहस्य, स्व० पं० सरयूप्रसादजी द्विवेदी कृत, सम्पा०-प्रो० गङ्गाधर द्विवेदी ।

## राजस्थानी और हिन्दी

१७. मुंहता नैणसीरी ख्यात, भाग ३, मुंहता नैणसीकृत, सम्पा०-श्रीबद्रीप्रसाद साकरिया ।
१८. गोरा बादल पदमिणी चऊपई, कवि हेमरतनकृत सम्पा०-श्रीउदयसिंह भटनागर, एम.ए.
१९. राजस्थानमें संस्कृत साहित्यकी खोज, एस. आर. भाण्डारकर, हिन्दी अनुवादक-श्रीब्रह्मदत्त त्रिवेदी, एम.ए.,
२०. राठोडांरी वंशावली, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
२१. सचित्र राजस्थानी भाषासाहित्यग्रन्थसूची, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
२२. मीरां-बृहत्-पदावली, स्व० पुरोहित हरिनारायणजी विद्याभूषण द्वारा संकलित, सम्पा०-पद्मश्री मुनि श्रीजिनविजय ।
२३. राजस्थानी साहित्यसंग्रह, भाग ३, संपादक-श्रीलक्ष्मीनारायण गोस्वामी ।
२४. सूरजप्रकाश, भाग ३. कविया करणीदानकृत सम्पा०-श्रीसीताराम लाळस ।
२५. रुक्मिणी-हरण, सांयांजी झूला कृत, सम्पा० श्री पुरुषोत्तमलाल मेनारिया, एम.ए.,सा.रत्न ।
२६. सन्त कवि रज्जबः सम्प्रदाय और साहित्य, डॉ० ब्रजलाल वर्मा ।
२७. समदर्शी आचार्य हरिभद्रसूरि, श्री सुखलालजी सिंघवी ।
२८. पश्चिमी भारत की यात्रा, कर्नल जेम्स टाड, अनु० श्रीगोपालनारायण बहुरा, एम.ए.

## अंग्रेजी

29. Catalogue of Sanskrit and Prakrit Manuscripts Part I, R.O.R.I. (Jodhpur Collection), ed., by Padamashree Jinvijaya Muni, Puratattvacharya.
30. A List of Rare and Reference Books in the R.O.R.I., Jodhpur, compiled by P.D. Pathak, M.A.

विशेष–पुस्तक-विक्रेताओं को २५% कमीशन दिया जाता है ।